**ततो जपः प्रकर्तव्यस्त्रिलक्षादिविभेदतः ।**
**उक्तं श्रीयोगसञ्चारे स च चित्रस्वरूपकः ।।८२।।**

त्रिलक्षादिविभेदवत्त्वे अस्य किं प्रमाणमित्याशङ्क्य उक्तमुक्तं श्रीयोगसञ्चारे इति। तदेव पठति स च चित्रस्वरूपकः॥८२॥

चित्र स्वरूपत्वमेव अस्य दर्शयति

**उदये सङ्गमे शान्तौ त्रिलक्षो जप उच्यते ।**
**आस्ये गमागमे सूत्रे हंसाख्ये शैवयुग्मके ।।८३।।**

---

सब कुछ वही है, तो फिर क्या आसन, क्या अर्चा और क्या मुहूर्त सब कुछ स्वात्म संविद् में आत्मसात् हो जाता है ॥८१॥

प्रसङ्गवश जप की चर्चा भी शास्त्रकार यहाँ कर रहे हैं—

उक्त परमेश्वर व्याप्ति की परानुभूति की दृष्टि से जप का स्वरूप भी आश्चर्यमयता की सीमा पार कर जाता है । इसे चित्रस्वरूप ही कहा जा सकता है । श्रीयोगसञ्चार नामक शास्त्र में तो जप के विषय में कई प्रकार की बातें कही गयी हैं । तीन लाख तक जप के भेद विभेद की चर्चा इसी प्रकार की है ॥८२॥

योग सञ्चार शास्त्र में जप की चित्रस्वरूपता के सम्बन्ध में कारिकाओं का अवतरण कर रहे हैं । इनमें शरीर के विभिन्न अवयवों में कितना कितना जप होना चाहिये, उसका निर्देश भी किया गया है । इसे अवयव क्रम से इस प्रकार समझना चाहिये—

| क्रम | अवयव | अर्थ | संख्या |
|---|---|---|---|
| १. | उदयः | (प्राणशक्ति का उदयस्थान) अर्थात् जन्माधार | तीन लाख |
| २. | सङ्गम | (अनेकानेक नाडियों का मिलन स्थल अर्थात् हृदय) | तीन लाख |

**पञ्चलक्षा इमे प्रोक्ता दशांशं होममाचरेत् ।**
**नेत्रे गमागमे वक्त्रे हंसे चैवाक्षसूत्रके ।।८४।।**

**शिवशक्तिसमायोगे षड्लक्षो जप उच्यते ।**
**नेत्रे गमागमे कर्णे हंसे वक्त्रे च भामिनी ।।८५।।**

**हस्ते च युग्मके चैव जपः सप्तविधः स्मृतः ।**
**नेत्रे गमागमे कर्णावास्यं गुह्यं च गुह्यकम् ।।८६।।**

**शतारेषु च मध्यस्थं सहस्रारेषु भामिनि ।**
**जप एष रुद्रलक्षो होमोऽप्यत्र दशांशतः ।।८७।।**

---

| | | | |
|---|---|---|---|
| ३. | शान्ति | (प्राणनिरोधात्मक गाढाधान) | तीन लाख |
| ४. | आस्य | (मुख का आन्तर अवस्थान) | पाँच लाख |
| ५. | गमागम | (प्राण और अपान रूप श्वास चार) | पाँच लाख |
| ६. | सूत्र | (इन्द्रियों की उल्लास भूमि) | पाँच लाख |
| ७. | हंस | (आत्मा अर्थात् आत्मावभासक हृदय) | पाँच लाख |
| ८. | शैवयुग्मक | (शिवशक्ति समायोग रूप जन्माधार या द्वादशान्त) | पाँच लाख |

इन जपों को पृथक् पृथक् अथवा उदय, सङ्गम और शान्ति में कुल मिलाकर तीन लाख और आस्य, गमागम, सूत्र, हंस और जन्माधार में एक एक लाख मिलाकर पाँच लाख जप करने के बाद दशांश हवन करना चाहिये ।

इसी क्रम में आस्य की जगह नेत्र के बाद गमागम, वक्त्र, हंस, अक्ष अर्थात् इन्द्रियों के नाड्यात्मकसूत्र और जन्मस्थान में अंगानुसर ६ लाख जप होना आवश्यक होता है । नेत्र, गमागम, वक्त्र के स्थान पर कर्ण, हंस, वक्त्र, दोनों हाथ—इन सात अवयवों के लिये सात लाख

**नेत्रे गमागमे कर्णौ मुखं ब्रह्मबिलान्तरम् ।**
**स्तनौ हस्तौ च पादौ च गुह्यचक्रे द्विरभ्यसेत् ।।८८।।**

उदये इति प्राणशक्त्युदयस्थाने जन्माधारे। सङ्गमे इति नानानाडिसंभेदभाजि हृदये। शान्ताविति प्राणनिरोधाय युगपद्गाढावधानात्मके इत्यर्थः। गमागमे इति प्राणापानप्रवाहरूपे। सूत्रे इति अक्षनाडीचक्रसूत्राणां भुवि। हंसाख्ये इति आत्मावभासके हृदये। युग्मके इति। शिवशक्तिसमायोगात्मनि जन्माधारे, द्वादशान्ते वा। गुह्यं जन्माधारः। गुह्यकमिति गुहायां भवं गुह्यं रन्ध्रं, तेन उपलक्षितं कं करन्ध्रं ब्रह्मविलमिति यावत्। शतारेष्विति सहस्रारेष्विति एवमादिकासु असङ्ख्यासु बह्वीषु नाडीषु। मध्यमं स्थानं हृदयं नाभिश्चेत्यर्थः। अत्रापि होम इति अपिशब्देन सर्वत्र दशांशो होमः कार्य इति आवेदितम्। गुह्यचक्रे इति योगिनीवक्त्राजवक्त्रापरपर्यायौ जन्माधारद्वादशान्तौ। जप एष षोडशलक्ष इति प्राग्रीत्या कल्पनीयम्। यत् एवमादिषु स्थानेषु प्राणो द्विर्भ्रमेदिति सर्वशेषः।।८८।।

एतत् स्वयमेव व्याचष्टे

**यत्र यत्र गतं चक्षुर्यत्र यत्र गतं मनः ।**
**हंसस्तत्र द्विरभ्यस्यो विकासाकुञ्चनात्मकः ।।८९।।**

---

जप आवश्यक होता है। इसी तरह नेत्र, गमागम, कर्ण, आस्य, गुह्य (जन्माधार), गुह्यक (ब्रह्मबिल) शतार और सहस्रार अथवा अन्य असङ्ख्य नाडियों के क्रम में ग्यारह लाख जप होना चाहिये। इसमें भी दशांश होम आचरणीय होता है। इसी तरह नेत्र, गमागम, दोनों कान, मुख, ब्रह्मबिल (गुह्यक), दोनों स्तन, दोनों हाथ और दोनों पैर तथा गुह्य चक्र (योगिनी वक्त्र और अजवक्त्र नामक जन्माधार और द्वादशान्त) इस क्रम में १६ लाख जप होना चाहिये। इन सोलह स्थानों पर प्राण का आना जाना दो बार होता है। इस तरह योग और अवयव संभार को ध्यान में रखकर यह चित्रात्मक क्रम अपनाया गया है। ।।८३-८८।।

यत्र यत्र वक्त्रादौ स्थाने चक्षुर्मनो वा गतं, यत्रैव असावनुसन्धत्ते योगी; तत्रैव हंसो हानसमादानधर्मा प्राणो विकासाकुञ्चनात्मकत्वात् द्विरभ्यस्यो निर्गमप्रवेशपर एवेत्यर्थः। तेन अस्य एवमुक्तानामास्यादीनामपमार्गाणां निरोधे अनुसन्धातव्यं येन सर्वतो रुद्धः सन् गत्यन्तराभावान्मध्यधामैव असावनुप्रविशतीति। अत्र हि प्रविष्टस्य ऐकात्म्येन मन्त्रमुच्चारयन्योगी तां तामासादयेत् सिद्धिम्। यदुक्तमन्यत्र

**'जपेत्तु प्राणसाम्येन ततः सिद्ध्यरहो भवेत्।'**इति।

एतदधिगमायैव च षोडशलक्षो जपः कार्यः इत्येनमादि उक्तम्। यत्तु लक्षाणां यथा यथं न्यूनत्वमुक्तं, तत्र योगिनामनुसन्धानतारतम्यं निमित्तम्॥८९॥

---

इस सम्बन्ध में वास्तविक दृष्टि यह है कि, जहाँ जहाँ आँखें जाती हैं और लौटती हैं, जहाँ जहाँ मन जाता है और लौटता है, इन दोनों क्रियाओं में दत्तावधान साधक हंस मन्त्र का भी दो दो बार (प्राणापानवाह सदृश विकास और संकोच के कारण) अभ्यास करता रहता है। इसी क्रिया को विकासाकुञ्चनात्मिका क्रिया कहते हैं। आचार्य जयरथ कहते हैं कि, जहाँ जहाँ वक्त्र आदि स्थानों, अवयवों आदि पर आखें या मन आते जाते हैं और वहां योगी अनुसन्धान करता है, वहीं हान और समादान धर्मा प्राण रूपी हंस विकास और संकोच स्वभाव के कारण दो बार अभ्यास योग्य माना जाता है। पहले अपान निर्गम करता है और प्राण प्रवेश करता है। इससे बड़ा सुन्दर परिणाम निकलता है। ये आस्य आदि अपमार्ग हैं। इस द्विरनुसन्धान से वहाँ हंस की अपयात्रा का निषेध हो जाता है। इस तरह के अवधानपूर्वक अनुसन्धान से अस्थान गमन अवरुद्ध हो जाता है। अब वह केवल मध्यधारा में गमागम का अभ्यस्त हो जाता है। मध्यधाम में प्रविष्ट प्राण के ऐकात्म्य से मन्त्र का उपांशु उच्चारण करने वाले योगी को भावानुकूल सिद्धि प्राप्त हो जाती है। इस सम्बन्ध में एक स्थान पर कहा गया है कि—

एवमपमार्गनिरोधात् मध्यधामनि एव प्ररोहं प्राप्तः प्राणः संविद्रूपोद्रेकात् विश्वात्मकतामेव यायात्। तदाह

**स आत्मा मातृका देवी शिवो देहव्यवस्थितः ।**

स देहव्यवस्थितोऽपि हंसः प्राप्तमन्त्रदेवतैकात्म्यः सन् आत्मा सङ्कुचिताणुरूपः।

**शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका।'**

इत्याद्युक्त्या मातृका देवी पारमेश्वरी शक्तिः शिवश्च नरशक्तिशिवात्मतया स एव परिस्फुरेदित्यर्थः॥८९॥

अत एव मन्त्रस्य प्राप्ततदैकात्म्यस्य प्राणस्य आत्मनश्च मन्त्रयितुर्न न कश्चिदपि भेदमनुसन्दध्यादित्याह

**अन्यः सोऽन्योऽहमित्येवं विकल्पं नाचरेद्यतः।।९०।।**

---

"प्राण के साथ ही जप करना चाहिये । इससे वह सिद्धि के योग्य हो जाता है ।"

इसी लक्ष्य की सिद्धि के लिये १ से १६ लाख तक के जप का निर्देश योग सञ्चार नामक शास्त्र में किया गया है । अधिक और कम जप का निर्देश योगियों की स्तरीयता के ही अनुकूल है । जप की इस चित्रात्मकता में भी रहस्य भरा हुआ है ॥८९॥

अपमार्ग का निरोध हो जाना अपने में एक बड़ी सिद्धि है । मध्यधाम में प्ररोह प्राप्त कर लेना साधक की एक बड़ी उपलब्धि है । इससे संविद्रूप का उद्रेक हो जाता है और वैश्वात्म्य का विकास होता है । यही कह रहे हैं—

प्राणापानवाह जीवन का वरदान है । यही हंस है । देह में व्यवस्थित आत्मा है । प्राणापान के गमागम से मन्त्र का ऐकात्म्य सिद्ध हो जाने पर जो योगी का स्वरूप निर्मित होता है, वह शक्ति से ओतप्रोत होता है ।

**यो विकल्पयते तस्य सिद्धिमुक्ती सुदूरतः ।**
**अथ षोडशलक्षादिप्राणचारे पुरोक्तवत् ।।९१।।**

'पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।'
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति ।।'

इत्यनेनैव अभिप्रायेण सर्वशास्त्रेषु ।

---

शक्ति देवी ही मातृका मानी जाती है । इस तरह देवी मातृका और हंस युक्त आत्मा का परिचय योगी से हो जाता है । वह आत्मा के इस अणुरूप का साक्षात्कार कर लेता है । एक स्थान पर कहा गया है कि,

"शक्ति ही मातृका है । मातृका शिवात्मिका ही होती है ।"

इस उक्ति के अनुसार मातृका पारमेश्वरी शक्ति है । शिव नर, शक्ति और शिवात्मक भाव से ही सर्वत्र स्फुरित होते हैं ।

इस तरह मन्त्र और मन्त्रात्मैक्य प्राप्त प्राण, आत्मा और साधक एक ऐसी एकात्मकता में घुल मिल जाते हैं, जो साधकों के अनुसन्धान का विषय है । यही तथ्य इस कारिका में अभिव्यक्त किया जा रहा है—

वह कुछ दूसरा ही है । मैं कुछ दूसरा ही हूँ, इस प्रकार मन्त्र, प्राण, आत्मा शक्ति और मन्त्रयिता इनमें विकल्प का सर्वथा परित्याग कर देना चाहिये । जो ऐसा नहीं करता, उससे सिद्धि और मुक्ति कोसों दूर रहती हैं । प्राण चार की इसी प्रक्रिया को सिद्ध करने के उद्देश्य से ही श्लोक ८८ में १६ लाख तक की संख्या में जप करने का निर्देश दिया गया है । इसमें किसी अत्युक्ति का आश्रय नहीं लिया गया है । इस सम्बन्ध में आगम कहता है कि,

"मन्त्र का पृथक् भावन, मन्त्री का पृथक् भावन विकल्पमूलक है । इस दशा में कभी सिद्धि नहीं मिलती है । इसमें ज्ञानमूलक दृष्टिकोण अपनाना चाहिये । अन्यथा सिद्धि कभी नहीं मिल सकती ।"

················**एकान्ते जपमारभेत्।'** इत्यादि उक्तम् ९१॥

मुख्यया वृत्या हि विकल्पविगम एव एकान्त उच्यते। तदाह

**शुद्धाशुद्धविकल्पानां त्याग एकान्त उच्यते।**
**तत्रस्थः स्वयमेवैष जुहोति च जपत्यपि॥९२॥**

**जपः सञ्जल्पवृत्तिश्च नादामर्शस्वरूपिणी।**
**तदामृष्टस्य चिद्वह्नौ लयो होमः प्रकीर्तितः॥९३॥**

**आमर्शश्च पुरा प्रोक्तो देवीद्वादशकात्मकः।**
**द्वे अन्त्ये संविदौ तत्र लयरूपाहुतिक्रिया ॥९४॥**

---

"एकान्त में जप आरम्भ करना चाहिये।" इस प्रकार की जो उक्तियाँ हैं, उनका एकमात्र तात्पर्य परमैक्यदशा की परानुभूति ही है ॥९०-९१॥

वस्तुतः विकल्प का विगलन ही एकान्त है। इस सम्बन्ध में अपने विचार व्यक्त कर रहे हैं—

यह शुद्ध है और यह अशुद्ध, इस प्रकार की सोच का नाम ही विकल्प है। इस प्रकार की पार्थक्य प्रथा को प्रथित करने वाली वैकल्पिकता का परित्याग कर सब कुछ का अन्त एक शिव ही है— यह वैचारिक भूमि ही वस्तुतः एकान्त है। ऐसे एकान्त में स्थित साधक स्वयं आत्म यज्ञ करता है। स्वयम् अजपाजप रूप शाश्वत जप करता रहता है। जप की परिभाषा करते हुए शास्त्रकार कह रहे हैं कि, नादामर्श स्वरूपिणी स्वात्म संजल्प की वृत्ति ही जप है। इस प्रकार के आमर्शरूप चिदग्नि में लय ही होम है।

संविदामर्श प्रमाता, प्रमाण और प्रमेय रूप त्रिक से सृष्टि, स्थिति, संहार और अनाख्य इस चतुष्क से गुणित करने पर बारह प्रकार का आकलित (श्रीत. ४/१२३) होता है। यही देवी द्वादशक का स्वरूप है। परप्रमातृरूपा स्वातन्त्र्य सर्वस्वा संविद् शक्ति की इन बारह अभेदामर्शात्मकता में अन्तिम दो लय और आहुति रूप विश्रान्ति मयी क्रियायें मानी जाती हैं। इसी उद्देश्य से शास्त्र में दशांश होम की व्यवस्था

**दशान्यास्तदुपायायेत्येवं होमे दशांशताम् ।**
**श्रीशम्भुनाथ आदिक्षत्त्रिकार्थाम्भोधिचन्द्रमाः ।।९५।।**

**'सच्च द्वादशधा तत्र सर्वमन्तर्भवेद्यतः।'** (४।१२३) इति।

तत्रेति द्वादशकमध्यात्। द्वे अन्त्ये संविदाविति परप्रमातृस्वातन्त्र्यशक्तिरूपे। एते एव च अस्मद्दर्शने 'स्वतन्त्रो बोधः परमार्थः इत्याद्युक्त्या विश्रान्तिस्थानमित्येवमुक्तं तदुपायायेति मेयमानादिसोपानक्रमेण परप्रमातरि विश्रान्तेरुक्तत्वात्। एतच्च शाक्तोपायाह्निक एव विभज्य उक्तमिति तत एव अवधार्यम्। एवमत्र होमस्य दशांशतायामयमभिप्रायः इत्यस्मद्गुरवः॥९५॥

एवं जपहोमपर्यन्तमर्चाविधिमभिधाय दौतं विधिमभिधातुमुपक्रमते

**साकं बाह्यस्थया शक्त्या यदा त्वेष समर्चयेत् ।**
**तदायं परमेशोक्तो रहस्यो भण्यते विधिः ।।९६।।**

---

की गयी है । त्रिक दर्शन की इस पूर्णार्था प्रक्रिया रूप रत्नाकर के राकेश गुरुवर्य शम्भुनाथ ने मुझे कृपाकर इस रहस्य का स्पष्टीकरण किया था ।

त्रिक दर्शन का निष्कर्ष वाक्य है— 'स्वतन्त्र बोध ही परमार्थ हैं' । स्वतन्त्र बोध ही विश्रान्ति स्थान है । जहां तक दश परामर्शों की उपायता का प्रश्न है, उसका तात्पर्य यही है कि, मेय और मान आदि सोपान क्रम से पर प्रमाता में विश्रान्ति प्राप्त की जा सके । यह अनुभूति का और साधना का विषय है । सोपान क्रम से आगे बढ़ते हुए चिद्वह्नि में विलय का सौभाग्य शिवानुगृहीत साधकों को ही सुलभ होता है । त्रिक शास्त्र का यही सर्वातिशायी उद्देश्य है ॥९२-९५॥

**इस प्रकार जप और होम के वास्तविक स्वरूप का उद्घाटन करने से साधक को साधना की अन्तिम सीढ़ी पर चढ़ने का सौभाग्य प्राप्त हो जाता है । यह उसका उत्तर दायित्व है कि, इस चिन्तारत्न को 'उर' 'कर' से खिसकने न दें । अनवरत अश्रान्त स्वात्म की पराविश्रान्ति की दिशा**

**'नित्योदिता परा शक्तिर्यद्यप्येषा तथापितु ।**
**बाह्यचर्याविहीनस्य दुष्प्रापः कौलिको विधिः।।'**

इत्याद्युक्त्या बाह्यचर्यया तावदवश्यभाव्यम्। तत्रापिच दूतीमन्तरेण न काचित्तत्सम्पत्तिरित्याह बाह्यस्थया शक्त्या साकमिति। तदुक्तं

'कर्तव्या सर्वतो दूतिर्दूतिहीनो न सिद्धिभाक्।' इति, तथा

**'ब्राह्मणस्य यथा पत्नी तया सह यजेन्मखे ।**
**एवं दूतिः कुलाचार्ये श्रेया नित्योदिते कुले।।'**इति ९६।।

---

में आगे पर आगे बढ़ते जायँ । इस व्याख्यान के बाद अब दौत विधिवर्णन का श्रीगणेश कर रहे हैं—

बाह्यस्थ शक्ति के साथ साधक इस प्रकार की अर्चा में जिस समय संलग्न रहता है, उस समय क्या करना चाहिये? इस सम्बन्ध में परमेश्वर प्रोक्त रहस्यमय विधि का निर्देश शास्त्र करते हैं । उसी विधिशास्त्र का उद्घाटन कर रहे हैं । आगम की उक्ति है कि,

"पराशक्ति न्नित्योदित शक्ति है । ऐसी स्थिति में भी बाह्यचर्या से विहीन साधक के लिये यह कौलिक विधि दुष्प्राप्य मानी जाती है । अर्थात् कौलिक प्रक्रिया में बाह्यचर्या आवश्यक है ।"

उस उक्ति के अनुसार बाह्यचर्या अनिवार्यरूप से आवश्यक और अवश्य चरितव्य हो जाती है । इसमें भी विशेषता यह है कि, दूती के बिना किसी प्रकार की विषय सम्पत्ति की उपलब्धि नहीं हो सकती । इसी भाव को 'बाह्यस्थ शक्ति के साथ अर्चन करे' इन शब्दों में शास्त्रकार ने व्यक्त किया है । कहा भी गया है कि,

"दूती का व्यवहार अनिवार्यतः करणीय है । दूतीप्रक्रिया से रहित साधक किसी दशा में सिद्धि नहीं प्राप्त कर सकता ।"

इसके अतिरिक्त और भी कहा गया है कि,

ननु सर्वत्र अविशेषेणैव भगवदाराधकस्य

**'अदाम्भिको गुरौ भक्तो ब्रह्मचारि जितेन्द्रियः ।**
**शिवपूजापरो मौनी मद्यमांसपराङ्मुखः ।।'**

इत्यादि लक्षणमुक्तम्। तत्कथमिह बाह्यस्थया शक्त्या सह समर्चयेदित्युक्तमित्याशङ्कां परमेश्वरोक्त्यैव निरवकाशयन्नमुष्य विधेः पीठिकाबन्धं करोति

**उक्तं श्रीयोगसञ्चारे ब्रह्मचर्ये स्थितिं भजेत् ।**

ननु ब्रह्मैव नाम किं यदाचरणेऽपि स्थिति भजेदित्याशङ्क्य आह

**आनन्दो ब्रह्म परमं तच्च देहे त्रिधा स्थितम् ।।९७**

---

"ब्राह्मण की पत्नी जैसे किसी यज्ञ में उसके साथ ही यजन करती है, उसी तरह नित्योदित उस कुल मार्ग में कुलाचार्य के साथ दूती का प्रत्येक मख में साथ देना अनिवार्यतः आवश्यक है।"

वैदिक परम्परा में ब्राह्मण धर्म की अपनी एक अलग मर्यादा है । उसमें पत्नी सहधर्मिणी होती है । यहाँ कुल मार्ग मे कुलाचार्य के लिये दूती ही सहधर्मिणी के समान है । यह सिद्ध होता है ।।९६।।

यहाँ इस स्थिति पर गंभीरता से विचार करने की आवश्यकता है । भगवान् की आराधना में निरत आराधको के लिये यह सामान्य नियम है कि,

"वह दाम्भिक नहीं होता । गुरु में भक्ति रखता है । ब्रह्मचर्य व्रत का पालन करने वाला होता है । उसे इन्द्रियजित होना भी आवश्यक है । निरन्तर शिव की पूजा में लगा रहता है । मौन व्रत का आचरण करने वाला एवं मद्यमांस आदि तामसिक पदार्थों के सेवन से अनवरत परहेज करता है ।"

यह शिवाराधकों का लक्षण शास्त्र में प्रसिद्ध है । ऐसी स्थिति में यहाँ 'बाह्यस्थ शक्ति के साथ अर्चन करे' यह क्यों कहा गया है? इस आशङ्का का समाधान श्लोक ९६ का 'परमेश्वरोक्त' शब्द ही एक तरह

**उपकारि द्वयं तत्र फलमन्यत्तदात्मकम् ।**

**'आनन्दो ब्रह्मणो रूपं**…………………।।' इति।

परममित्यनेन अस्य अवश्यसेव्यत्वमुक्तम्। तच्च न केवलं परब्रह्मादिविभेदमात्मनि एव स्थितं, यावदनात्मरूपे बाह्यशरीरादावपीत्याह देहे इति। तत्रेति त्रयाणां मध्यात्। द्वयमिति मद्यमांसलक्षणम्। अन्यदिति मैथुनम्।

मद्यमांसपानाशनप्रवर्धितधातुर्हि रममाण आनन्दमियादित्युक्त-मुपकारीति फलमिति च। अत एव तदात्मकमिति सर्वशेषत्वेन उक्तम्। तच्छब्देन च अत्र आनन्दपरामर्शः॥१७॥

---

से कर देता है। जब स्वयं परमेश्वर ही यह कह रहे हैं, तो कौन दूसरा उससे सक्षम है, जो उसके कथन को अन्यथा कर सके। इसलिये इसकी अवश्यकर्तव्यता को ध्यान में रखकर इसकी पृष्ठभूमि की आधारशिला रख रहे हैं—

श्री योग सञ्चार शास्त्र में यह स्पष्ट निर्देश है कि, ब्रह्मचर्य में अवस्थित रहना चाहिये। यहाँ एक बात विचार करने योग्य सामने आ जाती है। इस शास्त्र की दृष्टि में ब्रह्म का कोई स्थान या उसकी कोई मान्यता ही नहीं है। ऐसी स्थिति में उसके लिये आचरण, उससे सम्बन्धित चर्या आदि की कौन सी स्थिति हो सकती है, जिसके लिये 'भजेत्' इस विधि क्रिया का प्रयोग किया गया है? इस आशङ्का की दृष्टि से उसका समाधान प्रस्तुत कर रहे हैं—

वास्तविकता यह है कि वेद भी ब्रह्म को आनन्द रूप ही मानता है। "आनन्द ब्रह्म का ही रूप है।" यह वेद की ही उक्ति है। हमारे दर्शन में भी आनन्द को परमब्रह्म के रूप मे ही स्वीकार करते हैं। वह इस शरीर मे त्रिधा अवस्थित है। प्रथम उसका रूप 'मद्य' है। उसका दूसरा रूप मांस है। ये दोनों तीसरे के उपकार के लिये अर्थात् उसके पुष्ट संवर्धन के लिये प्रयुक्त होते हैं। इनके अतिरिक्त अन्यत् अर्थात् मैथुन

एवमेषां ब्रह्ममयत्वादेतदनुष्ठाता ब्रह्मचारीत्युच्यते इत्याह

**ओष्ठ्यान्त्यत्रितयासेवी ब्रह्मचारी स उच्यते।।९८।।**

ओष्ठ्यः पवर्गः, तस्य अन्त्यो मकारस्तत्त्रितयं मद्यमांसमैथुन लक्षणम्।।९८।।

ननु

**'न मांसभक्षणे दोषो न मद्ये नच मैथुने।**

**प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला।।'**(मनु. ५।५६)

इत्याद्युक्त्या मांसादिनिवृत्तौ शास्त्रं प्रयोजकं, न तत्प्रवृत्तौ तस्याः स्वारसिकत्वात्। नहि मलिनः स्नायात् बुभुक्षितोऽश्नीयादित्यादौ क्वचिच्छास्त्रमुपयुक्तम्। तत्किमेतदुक्तमित्याशङ्क्य आह

---

तीसरा ब्रह्म है। यह तो निरा आनन्दात्मक ही है। तदात्मक शब्द से यही ध्वनि निकल रही है कि, यह पराकाष्ठात्मक आनन्द रूप ही है। तत् शब्द यहाँ आनन्द का ही परामर्शक है।

यहाँ दो बातों पर विशेष विचार करना है।

१. देह में तीन तरह से आनन्द अवस्थित है। इस प्रयोग में देह शब्द का प्रयोग है। यहाँ देह का क्या तात्पर्य है? देह सूक्ष्म आत्म स्वरूप को भी कहते हैं और अनात्म बाह्य शरीर को भी कहते हैं। ब्रह्म में परमरूप विशेषण उसकी अवश्य सेवनीयता को व्यक्त करता है। ऐसा परम सेवनीय आनन्द सूक्ष्म में अर्थात् आत्म रूप में तो व्याप्त ही है, अनात्म शरीरों में भी है। अनात्म शरीरों में यह तीन तरह से अवस्थित है।

२. दूसरी बात जिस पर विचार करना है, वह है— 'उपकारि द्वयं' का प्रयोग। मद्य और मांस के पान और अशन अर्थात् रुचिपूर्वक भोजन से धातुगत वृद्धि होती है। यह आयुर्वेद शास्त्र से समर्थित है। व्यक्ति पुष्ट और वीर्यवान् बनता है। बलशाली रहने पर ही सानन्द 'मैथुन' के परानन्द में जगदानन्द की सुखोपलब्धि सम्भव है। अतः मद्य, मांस और

**तद्वर्जिता ये पशव आनन्दपरिवर्जिताः ।**
**आनन्दकृत्रिमाहारास्तद्वर्जं चक्रयाजकाः ।।९९।।**

**द्वयेऽपि निरये यान्ति रौरवे भीषणे त्विति ।**

इह ये केचन कुलप्रक्रियामनुप्रविष्टा अपि तत्र विहितमपि एतत् लोभेन विचिकित्सया वा चक्रयागादौ स्वस्मै परस्मै वा न ददति, ते पशव एव यतः परब्रह्मात्मभूतेन तदुद्भूतेन आनन्देन परिवर्जिना देहादावेव गृहीतात्माभिमाना इत्यर्थः। तदुक्तं

---

मैथुन रूप आनन्द के उपकारी माने जाते हैं । मद्य और मांसाशी अधिक मैथुन प्रिय होते हैं ।

इन तथ्यों के सन्दर्भ में यह निश्चय हो जाता है कि मद्य, मांस और मैथुन का सेवन करने वाला भी आनन्दब्रह्म के इन तीनों रूपों के सेवन रूप आचरण के कारण ब्रह्मचारी है । यही कह रहे हैं—

ओष्ठ्यान्त्य रूप इस त्रितय का आसेवन करने वाला निश्चय ही ब्रह्मचारी है । ओष्ठ्य वर्णनात्मक वर्ग पवर्ग है । उसका अन्तिमवर्ण मकार है । 'म' मद्य, मांस और मैथुन का आदि अक्षर है और इन तीनों का वाचक है । इस लिये त्रिमकार सेवी ब्रह्मचारी है, यह सिद्ध हो जाता है । ब्रह्मचारी का यह मौलिक दृष्टिकोण ही मान्य है ॥९८॥

मनुस्मृति में भी मद्य, मांस और मैथुन की चर्चा है किन्तु उसका लक्ष्य दूसरा है । वहाँ कहा गया है कि,

"मद्य पान में, मांस भक्षण में और मैथुन में कोई दोष नहीं है । यह भूतमात्र की प्रवृत्ति है । हाँ, प्रवृत्ति से अधिक पुण्यप्रद निवृत्ति है । निवृत्ति महाफला होती है ।"

इस श्लोक में प्रवृत्ति की एक तरह से निन्दा ही की गयी है । निवृत्ति को महिमान्वित किया गया है । यह कहा जा सकता है कि, मांसादि से

**'कुलाम्नायेषु ये सक्ता एभिर्द्रव्यैर्बहिष्कृताः ।**
**पशवस्ते समुद्दिष्टा न तैस्तु सह वर्तनम् ।।'**इति।

येऽपि स्वयं गर्धवशादानन्दकृतस्त्रीन् मानाहरन्ति मकारत्रयमुपभुञ्जते, चक्रं पुनर्लोभादिना तद्वर्जं यजन्ते; तेऽपि पशव एवेति प्राच्येन सम्बन्धः। तदुक्तं

**'विना गुरुं विना देवं मूढवत्परमेश्वरि ।**
**मद्यमांसाशिनो नित्यं पशवस्ते न संशयः ।।'** इति।

एवं द्वयेऽपि ते विहितस्य अकरणादविहितस्य च करणाद्धीषणे रौरवे नरके यान्ति तत्र यातनासहस्राणि अनुभवन्तीत्यर्थः। एवमेतत् कुलमार्गानुप्रविष्टेन सर्वथा स्वात्मानन्दव्यञ्जकतामात्रपरतया सेव्यं, नतु तद्गर्धेन। तथात्वे हि अस्य लौकिकेभ्यः को विशेषः स्यात्। यदाहुः

---

निवृत्ति ही शास्त्रीय लक्ष्य है । मद्य आदि की प्रवृत्ति मे कोई अन्तर्वर्त्ती माधुर्य की उपलब्धि नहीं होती, केवल, बाह्य आकर्षण मात्र है । कोई अनिर्वचनीय स्वारस्य उसमें नहीं होता । कोई मलिन है । वह नहायेगा ही । कोई भूखा है, उसे भोज्य चाहिये ही । ऐसे सामान्य स्तरो पर शास्त्र का उपयोग ही क्या हो सकता है? इस विवेचन के आधार पर यह पूछा जा सकता है कि, फिर मद्य, मांस और मैथुन के प्रयोग पर इतना बल क्यों प्रदान किया गया है? उन्हें शास्त्रीय मान्यता दिये जाने का उद्देश्य क्या है? इस शङ्का को ध्यान में रख कर शास्त्रकार कह रहे हैं—

वास्तव में कुल मार्ग की दृष्टि यह है कि, इन पदार्थो से जो वंचित रह जाता है, वह वास्तविक तदुद्भूत आनन्द ब्रह्म से वंचित हो जाता है । इस ब्रह्मानन्द से वंचित पुरुषों को पशु की संज्ञा ही प्रदान की जा सकती है । क्योंकि वे घृणा और परिवर्जन के पाश से बद्ध हैं । यह सत्य है कि, जो मद्य नहीं पीते, मांस नहीं खाते और मैथुन में पराङ्मुख होते हैं, उनमें एक प्रकार की विचिकित्सा, एक प्रकार की घृणा तो रहती ही है । इसको संकोच मानते हैं । संकोच आणवमल है । आणवमल से ग्रस्त व्यक्ति को अणु या पशु कहने की शास्त्रीय परम्परा है । इस दृष्टि से वे पशु हैं । दूसरी

'ब्रह्मण्यानन्दाख्यं रूपमतो यत्समाश्रयवशेन ।
लभ्यत एव तदखिलं समाहरेद्विषयगर्धनिर्मुक्तः ।।उ.१।।

कामान्मोहाद्विषयाद्व्यतिरिक्तभावसंरूढात् ।
प्रसरत्यानन्दो यः सोऽपि पशूनामपीह साधारः ।।उ.२।।

चिन्मात्रात्मपरत्वे संवित्तेर्व्यञ्जको हि यो विषयः।
योग्यात्मना विभाति च भोक्तुः स्वात्मन्यभेदतः सततम्।।उ.३।।

उक्तः स एव विषयो भिन्नश्चाभेदितां समायातः।' इति,उ.४।।

'अपरिच्युतस्वरूपैरपृथग्भूतापि विषयसंवित्तिः ।
भुज्यत एव त एते वीरव्रतिनो महाक्रमारूढाः ।।उ.५।।

---

बात यह भी है कि, दीक्षा तो कुलमार्ग की ली । कुल सम्प्रदाय में प्रविष्ट हुए । ऐसी दशा में इस मार्ग में जो विहित है, उसे अवश्य ग्रहण करना चाहिये । विहित का आचरण न करना भी अपराध ही है । ये लोग निश्चित देहाभिमानी हैं । ये आनन्द वंचित रह जाते हैं । ये भी पशु ही हैं । आगम इस विषय में कहता है कि,

"जो कुलाम्नाय में सम्पृक्त हैं, दीक्षित हैं और इन द्रव्यों से बहिष्कृत हैं अर्थात् वंचित हैं, उन्हें पशु ही कहना चाहिये । ऐसे लोगों के साथ कुलाम्नाय निष्ठ कौल को किसी प्रकार का व्यवहार नहीं करना चाहिये ।"
(पृ.४०२)

कुछ लोग ऐसे भी होते हैं, जो केवल आनन्द के लिये लोभवश मद्य, मांस और मैथुन में आनन्द लेते हैं । कुछ लोग इनके विना ही चक्र-याग कर लेते हैं या करते रहते हैं । ये दोनों प्रकार के व्यक्ति नरक भोग प्राप्त करते हैं । इन्हें भीषण रौरव नरक मे रहना पड़ता है । आनन्दकारी तीन मकारों का आहरण करने वाले 'आनन्दकृत्त्रिमाहार' कहलाते हैं । ऐसे लोग प्रथम प्रकार में आते हैं और इनके विना चक्र याजक दूसरे प्रकार में आते हैं । ये दोनों नरकगामी हैं । यह निश्चय है । आगम कहता है कि,

**लक्षस्थो जपरूढो नियमरतो ब्रह्मचर्यशान्तमनाः ।**
**सङ्घट्टेऽपि च रूढो महामनस्वी सुशान्तवपुः ।।उ.६।।**

**अतिमार्गविनयकथितैःसमयाधर्मैश्च संग्रहो यस्य ।**
**योऽपि महासंबुद्धः संविन्मय एव सर्वदा स्वस्थः ।।उ.७।।**

**स्वात्मानुभूतिसिद्ध्यै विषयस्पर्शी न लौल्यभावनया।**
**पशुभावनाविमुक्तः स ह्यभियुक्तो महामार्गे ।।उ.८।।**

---

"विना गुरु को अर्पित किये और विना आराध्यदेव को निवेदित किये मूढ़ लोगों की तरह हे पार्वति! जो मद्य और मांस भी खा जाते हैं, वे नित्य पशु हैं, इसमें संशय नही ।" (पृ.४०२)

इस तरह ये दो श्रेणी के लोग विहित के न करने से, तथा अविहित के सम्पादन करने से दोष भागी बनते हैं और रौरव का कुफल भोगने के लिये बाध्य हो जाते है । इससे यह निश्चय हो जाता है कि, कुलमार्ग में अनुप्रवेश प्राप्त कर लेने पर साधक को निरन्तर सावधान रहना चाहिये । उसे देह जन्य अभिमान से ऊपर उठ कर आनन्द को आत्मसात् कर स्वात्म के उत्कर्ष के लक्ष्य की पूर्त्ति के लिये इन द्रव्यों का उतना ही सेवन उचित है, जिससे आनन्द की स्वारसिकता से ओतप्रोत हो सके । कभी भी लोभ और व्यसन की दृष्टि इसमें न आवे । यदि इस प्रकार का उदात्त दृष्टिकोण न अपनाया गया तो सामान्य लोगों से कुलाम्नायनिष्ठ साधक में अन्तर ही क्या किया जा सकता है? इस विषय में गुरुजन कहते है कि,

"जिनका आश्रय लेने से ब्रह्मानन्द नामक आनन्द (ब्रह्मण्यानन्दाख्य) उपलब्ध होता हो, उन समस्त वस्तुओं का समाहरण करना चाहिये । इसमें गर्ध (लोलुपता, व्यसनता) का तनिक भी अवकाश नहीं होना चाहिये । इस श्लोक में समाहरेत् शब्द में 'मकारेण सहितान् समान् आहरेत्' इस व्युत्पत्ति के अनुसार मद्य, मांस और मैथुन सहित सभी आनन्ददायी वस्तुओं का आहरण करना अर्थ भी निहित है ।" (उ.१।।)

**यः सावधानवृत्तिः स्वात्मनि मध्येऽपि लोकयात्रायाम् ।**
**वामाचारविधावपि भवत्यसौ पालने सदास्खलितः** ।।उ.९।।

**यश्चरमधातुसर्गे समयलवस्यान्तरे स्वसंवृत्त्या ।**
**सर्वासां वृत्तीनां प्रत्यस्तमनाश्चेतसो झटिति ।**
**आनन्द संविदुदयो रूपं तद्ब्रह्मणः समाख्यातम्** ।।उ.१०।।
इति च ९९।।

ननु अत्र मद्यमांसासेवनं सुकरमिति आस्तामेतत्। इतरत् तु अमर्त्यानामपि दुष्करं किं पुनर्दौर्भाग्यभाजां मर्त्यानाम्। तस्मात्

---

"काम से, मोह के आवेश से, विषयों के सेवन से अथवा इनके अतिरिक्त भावों में संरूढ होने से भी आनन्द की उपलब्धि होती है । ये सारे आनन्द पाशबद्ध जीवों को मिलने वाले आनन्द है । ये सभी (किसी अव्यक्त) आधार पर ही आधारित हैं ।" (उ.२)

"आनन्द के इस सन्दर्भ मे एक ध्यान देने की बात यहाॅ है । कुछ ऐसे विषय हैं, जिनके सेवन से चिन्मात्र रूप आत्मपरायणता की दशा में संवित्तत्त्वात्मक आनन्द की व्यञ्जना होती है । इस विषय को संवित्ति व्यंजक विषय कहते हैं । भोक्ता के स्वात्म में समाहित सा वह योग्यता के आधार पर अभेद भाव से सतत अनुभूत सा होता है । यद्यपि वह भिन्न होता है फिर भी वह अभेदात्मकता से संवलित सा प्रतीत होता है ।" (उ.३)

"जहाँ तक विषय संवित्ति का प्रश्न है, वह अपने अपरिच्युत स्वरूप से पृथक नहीं होती । उसका स्वरूप प्रच्याव नहीं होता । उसी संवित्ति का उपभोग उस स्तर पर विषयास्वाद करने वालों द्वारा किया जाता है । ये उपभोक्ता दूसरे कोई नहीं, अपितु यही वीरव्रती कुलाम्नायनिष्ठ महाक्रम में आरूढ साधक होते हैं । ऐसा साधक अपने लक्ष्य अर्थात् उद्देश्य में स्थित होता है । अथवा लक्षात्मक संख्यक जप में रूढ रहता है अथवा दूसरा कोई भले उसे मद्यप आदि माने, पर वह छद्म भाव से विषय संवित्तिजन्य आनन्द के उपभोग में आरूढ़ रहता है । हंस मन्त्र के जप

'ततस्तत्रानयेद्दूतीं मदघूर्णितलोचनाम् ।
विम्बोष्ठीं चारुदशनां सभ्रूभङ्गाननां शुभाम् ।।उ.११।।

त्रस्तबालमृगाभासनयनां चारुहासिनीम् ।
स्फुरद्भ्रमरसङ्घातनिभसत्केशपाशिकाम् ।।उ.१२।।

कामकार्मुकसङ्काशभ्रूभङ्गतरलेक्षणाम् ।
द्रवच्चामीकराकारसवर्णां निस्तरङ्गिणीम् ।।उ.१३।।

कर्णाभरणसच्चित्रशोभाशतसुशोभनाम् ।
सत्कम्बुनिभसत्कण्ठवरभूषणभूषिताम् ।।उ.१४।।

---

में सदा तत्पर रहता है । कुलाम्नाय के समय-नियमों के पालन में निरन्तर निरत रहता है । अपनी परिभाषा के अनुसार ब्रह्मचर्य में निष्ठ रहने से उसका मन अत्यन्त शान्त रहता है । वह यामल संघट्ट में आरूढ होता है । महामनस्वी इस कौल का शरीर शान्ति का प्रतीक बन जाता है ।''
(उ.४-६)

अतिमार्ग में जिस विनय की अपेक्षा की जाती है, उस दशा में प्रयोज्य समय धर्मों से वह संवलित होता है । आग्रह पूर्वक वह उन धर्मों का पालन करता, कराता और ज्ञाता होता है । अपने स्वात्म के उत्कर्ष के प्रति वह महासंबुद्ध और बोध के प्रकाश का प्रखर और जागरूक प्रज्ञापुरुष होता है । संविद् की विमर्श भूमि का वह भूमा बन जाता है । अतः उसे संविन्मय कहते हैं । वह सदा सर्वदा आत्मस्थ होता है । (उ.७)

स्वात्मानुभूति की सिद्धि के लिये ही विषयों का स्पर्श करता है अन्यथा इनसे विरक्त रहता है । कभी भी लौल्य या लिप्सा की वृत्ति उसमें उदित नहीं होती । पशु की पाशव प्रवृत्ति से वह सर्वथा विमुक्त होता है । इस कुलाम्नाय रूप महामार्ग का वह श्रेष्ठ साधक होता है और अभितः संयुक्त होता है । (उ.८)

अपनी वृत्तियों के प्रति वह सदा सावधान रहता है । स्वात्मनिष्ठ रहते हुए और लोक यात्रा के मध्य वह कहीं भी हो, उसकी दत्तावधानता में अन्तर नहीं पड़ता । वामाचार विधि के परिपालन में भी उसमें कभी श्लथता नही आती । किसी प्रकार की स्खलिति उससे नहीं होती । (उ.९)

गजकुम्भनिभोद्दामस्तनभारावनामिताम् ।
सुवृत्तोपचिताकारबाहुकन्दलिमण्डिताम् ।।उ.१५।।

सत्पञ्चफणसङ्काशकरशाखाविराजिताम् ।
स्फुरद्रत्नशिखाचित्रकोर्मिकाङ्गुलिशोभिताम् ।।उ.१६।।

पूर्णेन्दुवरलावण्यवदनां चित्तहारिणीम् ।
हरिहेतिमहासिंहपिपीलवरमध्यगाम् ।।उ.१७।।

त्रिवलिश्रेणिसद्बिम्बजघनालसगामिनीम् ।
रम्भाकरिकराकारवरोरुवरजङ्घिकाम् ।।उ.१८।।

सत्कामरथचक्राभगुल्फपादसुशोभनाम् ।
प्रलम्ब हेमाभरणहारावलिविराजिताम् ।
स्फुरन्मञ्जीरझाङ्काररशनामुखरस्वनाम् ।।उ.१९।।

---

चरम धातुसर्ग कुलमार्ग की शिवशक्ति की एक परावस्था की अनुभूति का स्तर होता है । उसमें समय के शतांश के अन्तर को भी वह व्यर्थ नहीं जाने देता । अपनी संवित्ति की सम्यक् संवेदना से सभी अन्यान्य वृत्तियों का नियन्त्रण कर अवस्थित रहता है । उसकी संवित्ति के सूरज के प्रकाश में सारी चित्तवृत्तियाँ अस्त रहती हैं । ऐसे कौल साधक में आनन्द संविद का उदय होता है । यह एक प्रकार ब्रह्म रूप आनन्द कर प्रतीक है । इसे ही आनन्द रूप शास्त्र कहते हैं ।।९९।। उ.१०।।

कुलाम्नाय में बाह्य शक्ति की पूजा आवश्यक मानी जाती है । ऐसी शक्ति की प्रतीक ही दूती होती है । दूती से जो सुख और भोग उपलब्ध होते है, वे देवदुर्लभ है । सामान्य के लिये इनकी प्राप्ति दुष्कर है । फिर भी यह साधना के एक विशेष अंग के रूप से स्वीकृत है । सम्प्रदाय स्वीकृत मान्यता इसे प्राप्त है । इस पर गंभीरता से विचार करना आवश्यक है । इस व्यापक शास्त्रीय विचारों से अवगत कराने के लिये विद्वान् व्याख्याकार ने श्री तन्त्रराजभट्टारक और श्री त्रिशिरोभैरव के दो लम्बे

**पारिहार्यझणत्कारवलयध्वानमन्थराम्** ।
**मत्तनागेन्द्रसङ्काशगतिं गम्भीरनाभिकाम्** ।।उ.२०।।
**हंसगद्गदवाग्वंशसदृशां शुभभाषिणीम्** ।
**केयूरसूत्रिकामोदिपुष्पस्त्रग्दामभूषिताम्** ।।उ.२१।।

---

उद्धरण यहाँ उद्धृत किये हैं । इन उद्धरणों मे दूती के स्वरूप और उसके अनिन्द्य सौन्दर्य भरे आकर्षक शब्दचित्र है । इनमे से श्रीतन्त्रराज भट्टारक का उद्धरणार्थ इस प्रकार है—

"मद्य मांस के उपरान्त तीसरी क्रिया की सिद्धि के लिये दूती का आनयन करना चाहिये । दूती कैसी हो? इसके लिये उनके लक्षण देते हुए कह रहे हैं कि, उसकी आँखों में जवानी की मदहोश शोखी झलक रही हो, बिम्ब के फल के समान उसके अधर हों, सुभ्रु भङ्गिमा से उसका मुख और अधिक सुन्दर लगता हो और शुभावती हो । वही स्त्री दूती हो सकती है । ये दूती के लक्षण हैं ।।उ.११।।

भीत मृगशावकवत् कम्पित सुलोचनोंवाली, सुहासिनी, भ्रमरराशि के समान स्फुरणशील और कृष्णावर्णीकेश राशि से आकर्षक, कामदेव की धनुष सदृश भौहों वाली, तरल नेत्रा, ताप्तदिव्यकाञ्चनवर्ण सुलक्षणा, शान्ता, कानों के आभरणों की विचित्र चञ्चलता से शतगुणित शोभा से भासमान, शङ्खवत् ग्रीवा में सुन्दर ग्रैवेयक से शोभमान, उत्तुङ्ग गजकुम्भी स्तनों के भार से झुकी हुई सी, सुन्दर सुडौल बाहुओं की लताओं से मण्डित, सुन्दर अंगुलियों से पञ्चफणलक्षणलक्षिता, प्रिया, रत्नशिखा से स्फुरित रश्मियों की उर्मियों सी सुन्दर कराङ्गुलियों वाली सुन्दरी दूती होनी चाहिये ।।उ.१२।।

पूर्णिमा के पूर्णतया प्रकाशमान चन्द्रमा की हृदयहारिणी आभा के समान अमिताभ और प्रसन्न वदन वाली दूती श्रेष्ठ मानी जाती है । उसे देख कर मन उस पर लट्टू हो जाय, ऐसी चितचोर स्त्री ही दूती हो सकती

**महापञ्चफणापीडताम्बूलवरलालसाम् ।**
**नृत्तगीतससीत्काररलीलाकुट्टमिताावृताम्** ।।उ.२२।।

**निस्तरङ्गां सवर्णां च देव्येकार्पितमानसाम् ।**
**लोभमोहपरिक्षीणचेतसं चित्स्वभाविकाम्** ।।उ.२३।।

**भैरवैकचमत्कारचर्वणैकस्वरूपिणीम् ।**
**सा दूतिर्मोहनी मुद्रा जगत्यस्मिंश्चराचरे** ।।'उ.२४।।

इति श्रीतन्त्रराजभट्टारके ।

**'सुभगा सत्यशीला च दैशिकाज्ञानुवर्तिनी ।**
**प्रियवादिनी सुस्वरूपा सात्त्विका सङ्गवर्जिता**।।उ.२५।।

---

है । हरि (सिंह), हेति (किरण) अथवा हरिहेति (इन्द्रधनुष), महासिंह और चीटीं पिपीलक के समान पतली कमर वाली, त्रिबली की क्रमिकतामयी आभा से बिम्बित जघन की मांसल संरचना से अलस गमन करने की स्वाभाविकता से आकर्षक लगने वाली, कदली के उल्टे खम्भे और हाथी की सूँड की आकृति के समान स्वारस्यमयी सुकुमारता से विभूषित उसके ऊरु और सुन्दरता से सलीके से नीचे की ओर पतलापन मयी जङ्घिकाओं से युक्त दूती ही कुलाम्नाय में स्वीकरणीय है ।।उ.१२-१८।।

सुन्दर कामरथ चक्रचारु गुल्फ और प्रपदों से युक्त, प्रलम्बमान सुवर्ण निर्मित आभरणों से पूर्णाकर्षणमयी, कमर की चामीकर कर्धनी, और शिञ्जान-मज्जु-मञ्जीर की झङ्कारों से गति में संगीतिका भर देने वाली परिहार्य (कङ्कण या कड़ा नामक आभूषण) के और वलय अर्थात् बाजूबन्द की सुन्दरघण्टिकाओं के कर्णप्रिय झनझन झुनझुन की मन्द मन्द रणन अनुरणन ध्वनि से आकर्षक, हस्तिनी नायिका सी सर्वलक्षण विलक्षणा, नाभिगुहा की गम्भीरता में विश्व को समाहित करने में सक्षम, हंस पक्षी अथवा हंस अर्थात् हय की गद्‌गद् मन्द वाक् और वंशी की मधुरिम रुति

**भैरवाचारसम्पन्ना अमृतानां च सस्पृहा ।**
**सदैवाद्वैतनिरता अभ्यासस्था दृढव्रता** ।।उ.२६।।

**पुत्रवत्पश्यते सर्वान्त्र जुगुप्सेत्प्रसन्नधीः ।**
**सदाचारकुलोत्पन्ना अप्रसूता सुकेशिनी** ।।उ.२७।।

**मद्यकामत्तमृद्वङ्गी शुक्राढ्या चारुहासिनी ।**
**सुस्निग्धा च विनीता च सदातिथ्यसुभाविता** ।।उ.२८।।

**मन्त्रार्पितस्वरूपा च निर्मला निरहङ्कृतिः ।**
**पारम्पर्यक्रमस्था तु लोकाचारानुवर्तिनी** ।।उ.२९।।

**नित्ये नैमित्तिके चैव क्रमपर्वसु वर्तिनी ।**
**कामतन्त्रक्रियानिष्ठा जानाना देवतर्पणम्** ।।उ.३०।।

---

के समान मधुर वाग्वादिनी, केयूर की सूत्रिकाओं में सुरभित कुसुमों और पुष्प मालिका व गजरा पहनने से विभूषित दूती का चयन करना इस मार्ग में आवश्यक माना जाता है ।।उ.१९-२१।।

महापञ्चफण के समान करांगुलियों में पान को बीड़े को लेकर प्रिय आराधक को या स्वयं को खिलाने की लालसा वाली सुन्दरी स्त्री दूती बनने योग्य है । नायिकाओं की समस्त हाव भावों से उसे परिचित और दक्ष होना चाहिये । नृत्तकला (संगीत के साथ नृत्य और वादित्र की संगत से युक्त) और सामान्य गीत तथा सीत्कार की रागिनी में आरक्त रहने वाली, विविध रति और केलि क्रीडाओं में दक्ष एवं विविध अंगों के स्पर्श में सुखी होती हुई भी अस्वीकृति की मुद्रा में हाथ या शिर धुन कर झूठे विरोध प्रदर्शन में दक्ष होनी चाहिये । यहाँ लीला और कुट्टमित श्रृंगार रस के पारिभाषिक शब्द प्रयुक्त हैं ।।उ.२२।।

**सन्तुष्टा सर्वभावेषु**……………………… ।'इति॥उ.३१॥

श्रीत्रिशिरोभैरवे च प्रोक्तलक्षणा बाह्या शक्तिरप्राप्यैव। न हि एवं विधाः सर्वे गुणा एकत्र सङ्घटमानाः क्वचित् कदाचित् दृष्टाः। यदाहुः

'……….**क्व नु पुनः सर्वत्र सर्वे गुणाः** ।'इति॥उ.३२॥

---

निस्तरङ्गा अर्थात् व्यर्थ की चुलबुली से दूर रह कर तरङ्गायमाना, सुन्दर समरस वर्ण वाली और माँ कुलेश्वरी के प्रति श्रद्धा से अपने सर्वस्व का अर्पण करने वाली भक्तिमती स्त्री दूती के योग्य होती है । लोभ और मोह का उसमें प्रभाव नही होना चाहिये उसके स्वभाव में ही चैतन्य की प्रतिष्ठा हो । भैरव शिव के चमत्कार पूर्व सृष्टि चक्र में व्याप्त संविदद्वय सुधा के रसास्वाद में निमग्न रहने वाली स्त्री दूती हो सकती है । वह सृष्टिचक्र की मोहिनी मुद्रा के समान मानी जा सकती है । इस चराचर जगत् की वह निधि के सदृश है ।।उ.२३-२४।।

श्रीत्रिशिरोभैरव का उद्धरणार्थ—

सुभग सहज सौन्दर्य मयी, सत्यशीलवती, दैशिक द्वारा प्राप्त आदेश का अक्षरशः पालन करने वाली, प्रिय वादिनी, सुन्दर स्वरूप वाली, सात्त्विक वृत्ति वाली, आसक्ति रहित, भैरवीय आचार पद्धति से सम्पन्न, अमृतपान में स्पृहावती, सदा अद्वैत भावभाविता, अभ्यास में अवस्थित दृढ़व्रती, सबको पुत्र के समान मानने वाली, किसी के प्रति जुगुप्सा से विरत, प्रसन्न बुद्धि, मन और हृदय वाली, सदाचारी के कुल में उत्पन्न, प्रसवधर्म से अनभिज्ञ, सुकेशिनी, मद्य के सेवन से मदभरी दशा में अपेक्षाकृत सौकुमार्य से आकर्षक अङ्गों वाली, शुक्र अर्थात् तेज से आढ्य अर्थात् तेजस्विनी, सहज सुभग स्मितिमयी, स्निग्ध सुकुमार स्पर्शमयी, विनम्र, सर्वदा आतिथ्य सत्कार से प्रसन्न, मन्त्रात्मिका वृत्तिमयी, विमल, अहङ्कार से रहित, कुलाम्नाय की परम्परा में प्रतिष्ठित, लोकाचार का अनुवर्त्तन करने वाली, नित्य, नैमित्तिक और क्रमिक पड़ने वाले पर्वों का अनुवर्त्तन करने वाली, कामशास्त्र की समस्त तान्त्रिक प्रक्रियाओं में निष्ठा रखने वाली, देवतर्पण विज्ञ और सर्वभाव सुसन्तुष्ट वृत्ति वाली स्त्री ही

अनेवंविधा च दूतिः परिहरणीया। यदुक्तम्

**'अदूतिको वरं यागो नतु दुर्दूतिदूषितः ।'**इति॥उ.३३॥

नच अत्र विषभक्षणवाक्यवददूतिकत्वे तात्पर्यम्। तददूतिको यागो न कार्यः, दूतिश्च एवं विधा न प्राप्येत्यशक्यानुष्ठानमेतदित्याशङ्क्य आह

**शक्तेर्लक्षणमेतावत्तद्वतो ह्यविभेदिता ॥१००॥**

---

दूती हो सकती है । ये सभी लक्षण ऐसी स्त्री के है, जिन्हें 'बाह्याशक्ति' कहा गया है और जिनको पूजा के लिये प्रेरित किया गया है ॥

उ.२५-३१॥

प्रश्न है कि, क्या ऐसी बाह्या शक्ति सर्वजन सुलभ हो सकती है? कदापि नहीं । ऐसे सुन्दर लक्षण और ऐसे आदर्श गुण क्या कहीं एकत्र खोजने पर भी उपलब्ध हो सकते हैं? इसका एकमात्र उत्तर है, कदापि नहीं । इस विषय में आगम भी कहता है कि,

"सर्वत्र सभी गुण कहाँ मिल सकते हैं ।" (उ.३२) यदि ऐसी सर्व सुलक्षणा दूती न मिले तो सामान्य स्त्री का दूती के रूप में उपभोग नहीं करना चाहिये । कहा गया है कि,

"दूती के अभाव मे अदूतिक याग ही श्रेष्ठ होता है । वे याग जिनमें दूषित दूतियों का प्रयोग होता है, अच्छे नहीं माने जा सकते ।" (उ.३३)

यहाँ अदूतिक शब्द पर विचार करना चाहिये कि क्या यह सर्वथा निषेधात्मक है? जैसे कोई कहता है कि, 'विष नहीं खाना चाहिये' । इस वाक्य में विष के भक्षण का सर्वथा निषेध है । यहाँ प्रयुक्त अदूतिक शब्द ऐसा नहीं है । अदूतिक का अकार निषेधात्मक अकार नहीं है, वरन् अल्पार्थक है । अर्थात् यदि कम गुणों वाली दूती हो, तो याग उसके माध्यम से सम्पन्न कर लेना ही उचित है । निष्कर्षतः यह कहा जा सकता है कि, अदूतिक याग नहीं करना चाहिये । यदि ऐसी आदर्श दूती के विना यज्ञ अनुष्ठान अशक्य लगे, तो क्या करना चाहिये? इस जिज्ञासा का शमन करते हुए शास्त्रकार कह रहे हैं कि,

**तादृशीं तेन तां कुर्यान्नतु वर्णाद्यपेक्षणम् ।**

हीनाया अपि शक्तेरनेका सिद्धिः स्यात्। तदुक्तं

**'यदि लक्षणहीना स्यात् दूती वै साधकात्मनाम् ।**

**वीरैकचित्ता निष्कम्पा सर्वकर्मसु गम्यते ।।'** इति।

वर्णा मातङ्गाद्याः । आदिशब्दात् वयः प्रभृति लक्षणजातम् । शक्तेर्लक्षणमेतत्तद्वदभेदः । ततोऽनपेक्ष्यं वयोजात्यादिः । अत एव तत्तादात्म्यमेव अवलम्ब्य अस्याः सर्वत्र तत्तद्भेदभिन्नत्वमुक्तम् ।।१००।।

---

बाह्या शक्ति का यही लक्षण मानना चाहिये कि, उससे और तद्वान् से अभेद सम्बन्ध स्थापित हो सके । 'तद्वदभेद' शब्द दूरगामी अर्थ में प्रयुक्त है । तद्वान् वीर होता है । तद्वान् दैशिक होता है । तद्वान् कुलाम्नाय भी हो सकता हैं । इनमे एक निष्ठता ही अभेदिता मानी जाती है । दूती में यह एक निष्ठता यदि हो, तो उस समय तादात्म्य की भावना उत्पन्न हो जाती है और याग प्रक्रिया पूरी करने में सौविध्य हो जाता है । इसलिये शास्त्रकार कहते हैं कि, ऐसी अभेद सम्बन्धों के प्रति एकनिष्ठ स्त्री को दूती बनाया जा सकता है । इसमें वर्ण और अवस्था आदि की अपेक्षा करना अनावश्यक है । वास्तविकता यह है कि, हीन श्रेणी की यह बाह्या शक्ति अनेकानेक सिद्धि का द्वार खोल सकती है । कहा भी गया है कि,

"साधक आत्माओं की दृष्टि से यदि दूती लक्षणों से हीन भी हो, किन्तु उसमे वीर धर्म में एक निष्ठता हो, अपने कुलधर्म निर्वाह के विचार से डिगने वाली न हो, तो उसे सभी कुलाम्नाय के आचारों में स्वीकृत करने योग्य माना जाता है ।"

श्लोक में प्रयुक्त वर्ण शब्द से मातङ्ग आदि वर्णों का अर्थ लेना चाहिये । इसी तरह आदि शब्द से अवस्था का अर्थ लेना चाहिये । जहाँ तद्वान् से अभेद सम्बन्ध स्थापित करने की योग्यता सम्पन्नता का स्तर होता है, वहाँ वर्ण और वय आदि अन्य शर्तों की उपेक्षा कर देनी चाहिये । तद्वदभेदिता सबसे बड़ा गुण है । इसीलिये तादात्म्य की दृष्टि ही प्रधान दृष्टि है । इसको ध्यान में रखकर ही भेद भिन्नता पर भी दृष्टिपात करना सबके लिये आवश्यक है ।।१००।।

तदाह

**लौकिकालौकिकद्व्यात्मसङ्गात्तादात्म्यतोऽधिकात्।।१०१।।**

**कार्यहेतुसहोत्था सा त्रिधोक्ता शासने गुरोः ।**
**साक्षात्परम्परायोगात्तत्तुल्येति त्रिधा पुनः ।।१०२।।**

इह खलु गुरोः शासने अस्मद्दर्शने सा एवंविधा शक्तिर्जन्या जनिका सहजा चेति मुख्यया वृत्त्या त्रिविधा उक्ता यतोऽत्र अस्या लौकिकात् यौनादलौकिकात् ज्ञानीयाच्च सम्बन्धादधिकं तादात्म्यम्। अन्यत्र हि ज्ञानीय एव सङ्ग इति तत्र तथा न तादात्म्यमिति। एवं च अस्याः शक्तेः साक्षात् पारम्पर्येण वा द्वैधे षड्विधत्वम्। तदुक्तं

**'कार्यहेतुसहोत्थत्वात्त्रैधं साक्षादथान्यथा ।'**इति।

पारम्पर्ययोगो यथा कार्याया अपि कार्या हेतोरपि हेतुः सहोत्थाया अपि कार्या चेति। अत एव अत्र आसां तत्तुल्यत्वमुक्तम्। ननु

---

भेदभिन्नता की दृष्टि से दूती का आकलन कर रहे हैं—

तादात्म्य सम्बन्ध दो प्रकार के श्रेष्ठ हैं । १. यौन सम्बन्ध और २. अलौकिक अर्थात् ज्ञानीय सम्बन्ध । ये आत्मीयता के सम्बन्ध हैं । इससे भी अधिक आत्मीयता अर्थात् तादात्म्य सम्बन्ध होना कुलाम्नाय में अपेक्षित है । यह तीन तरह से आकलित होता है । प्रथमतः कार्य सम्बन्ध में शक्ति को जन्या शक्ति कहते हैं । २. द्वितीयतः हेतु सम्बन्धिनी शक्ति । इसे जनिका शक्ति कहते हैं और ३. तृतीयतया शक्ति को सहोत्था या सहजा कहते हैं । इन मुख्य वृत्तियों के कारण यह शक्ति तीन प्रकार की हो जाती है ।

यही शक्ति साक्षात् और पारम्पर्य के योग से छः प्रकार की हो जाती है । आगम कहता है कि, 'साक्षात्कार्य (जन्य) हेतु (जनिका) और सहोत्थ अर्थात् सहजा होने के कारण यह तीन प्रकार की होती है । (अन्यथा अन्यभेद अर्थात् परम्परा से भी इसके भेद होते हैं) ।''

**'स्वपत्नी भगिनी माता दुहिता वा शुभा सखी।'**

इत्याद्युक्त्या स्वपत्न्यपि अत्र कस्मात् न परिगणिता यत् तत्रापि अस्ति लौकिकालौकिकतया द्वयात्मसङ्गः। तत् कथमिह अस्याः षड्विधत्वमेव उक्तम्। सत्यं, किन्तु अत्र लौकिकवत् रिरंसया न प्रवृत्तिः, अपितु वक्ष्यमाणदृशा अनवच्छिन्नपरसंवित्स्वरूपावेशसमुत्कतयेत्येवंपरमेतदुक्तम्। स्वपत्न्यां हि रिरंसासम्भावनाया अपि अवकाशः स्यात्। यदुक्तं

**'दूतीं कुर्यात्तु कार्यार्थी न पुनः काममोहितः।**इति,

**'स्थित्यर्थं रमयेत्कान्तां न लौल्येन कदाचन्।।'**इति,

**'शिवशक्त्यात्मकं रूपं भावयेच्च परस्परम्।**
**न कुर्यान्मानवीं बुद्धिं रागमोहादिसंयुताम्।।**
**ज्ञानभावनया सर्वं कर्त्तव्यं साधकोत्तमैः।'** इति च।

---

पारम्पर्ययोग भेद उस समय होते हैं, जब वह कार्या की भी कार्या बन जाती है, जब हेतु से हेतु की सम्भावना हो जाय और सहोत्था से कार्या हो जाय। इस तरह इसके छः भेद स्वाभाविक रूप से दृष्ट होते हैं। सत्तुल्यता ऐसे अवसरों पर प्रतीयमान होती है। अर्थात् साम्यभाव से शक्तित्व के रूप से दूतीभाव में सहायिका हो सकती है।

यहाँ एक जिज्ञासा उत्पन्न होती है। बाह्या शक्ति के इस अनुसन्धान और उपलब्धि के लिये ललक लालसा भेद प्रभेद आदि ऊहापोह की क्या आवश्यकता? इनके स्थान पर आगम की,

"अपनी पत्नी, बहन, माता, पुत्री और शुभा स्त्रियाँ सखी भाव में आती हैं।"

इस उक्ति के अनुसार अपनी पत्नी भी दूती के रूप में क्यों नहीं परिगणित की गयी है? अपनी पत्नी में भी लौकिक और अलौकिक दोनों दृष्टियों से आसङ्गिक समायोजन हो सकता है। ऐसी स्थिति में शक्ति का षड्विधत्व अप्रामाणिक और अन्यथा सिद्ध हो जाता है। अतः अमान्य कहा जा सकता है।

अत्रैव शास्त्रान्तरविरोधोऽपि परिहृतः। तत्रापि हि रिरंसापरिहारेण कार्यार्थितया एवमाम्नातम्। यत्स्मृतिः

**'घृतेनाभ्यज्य गात्राणि तैलेनापि घृतेन वा ।**
**मुखान्मुखं परिहरन् गात्रैर्गात्राण्यसंस्पृशन् ।।**

**कुले तदवशेषे च सन्तानार्थं न कामतः ।**
**नियुक्तो गुरुभिर्गच्छेद्भ्रातुर्भार्यां यवीयसः ।।**'इति ।

---

आचार्य जयरथ इस आशङ्का का कुल मूलक दृष्टिकोण से स्वयं समाधन करते हैं । उनका कहना है कि, दूती कार्य में रिरंसा की दृष्टि नही होती । रिरंसा की भावना से इसमें प्रवृत्ति का सर्वथा निषेध है । इसमें तो वस्तुतः अनवच्छिन्न पर-संवित्समावेश की सुमुत्सुकता होती है । यदि पर संवित्स्वरूप समावेश का राजमार्ग ही न मिला, तो पूरा व्यापार ही व्यर्थ माना जा सकता है । विचारक यह जानते है कि, अपनी भार्या में रिरंसा की सम्भावना से इन्कार नही किया जा सकता । आगम स्पष्ट कहता है कि,

"कार्यार्थी अर्थात् परसंवित्स्वरूप समावेश रूप लक्ष्य का साधक दूती व्यापार में प्रवृत्त हो, काम से मोहित हो कर इस मार्ग को दूषित न करे ।"

आगमिक दृष्टि से अपनी पत्नी के साथ भी संभोग सुख रूप लौल्य के लिये रमण करने का निषेध किया जाता है—

"कान्ता के साथ केवल गर्भस्थिति अर्थात् सन्तति परम्परा सम्बर्धन के उद्देश्य से ही रमण करना चाहिये ।"

इसके अतिरिक्त भी स्त्रीपुरुष भाव के परिष्कार के उद्देश्य से आगम कहता है कि,

"स्त्रीपुरुष को परस्पर शिवशक्त्यात्मकरूप में ही भावित करना चाहिये । अपने में मानवी बुद्धि का आरोपण यथार्थ नहीं होता । इस राग

एवं च निर्विकल्पवृत्तीनां महात्मनां ज्ञानिनामेव अधिकारो येषां स्ववृत्तिप्रतिक्षेपेण संविदद्वैते एव किमेकाग्रीभूतं चेतो न वेति प्रत्यवेक्षामात्रे एव अनुसन्धानम्। यद्भिप्रायेणैव

**'न चर्या भोगतः प्रोक्ता ख्याता कामसुरूपिणी ।**

**स्वचित्तप्रत्यवेक्षातः स्थिरं किं वा चलं मनः ।।'**

इत्यादि उक्तम् ॥१०२॥

---

और मोह आदि कुवृत्तियों को अवकाश मिल जाता है । साधकोत्तम अर्थात् साधना में निष्ठा एवं दृढ़ता पूर्वक संलग्न साधकों का यह कर्तव्य है कि, वह जो कुछ भी करे ज्ञान भावना से करे । ज्ञान की उपेक्षा से पतन का भय उत्पन्न होता है ।"

इस वर्णन और कुलमार्ग की इस मान्यता से अन्य शास्त्रीय मान्यताओं से भी, मेल खाता है । विरोध का परिहार भी हो जाता है । जैसे (किसी) स्मृति का (मनुस्मृति का नहीं) एक वचन है कि,

"अपने गात्र के समस्त अंग प्रत्यंग को घी से मालिश कर (घी के अभाव में तेल लगाकर) मुख से मुख मेलाप को बचाते हुए अन्य गात्रों से अन्य के गात्रों का स्पर्श न करते हुए कुल के उद्देश्य से अथवा कुलावशेष की स्थिति में ही— यवीयान् अर्थात् छोटे भाई की भार्या के साथ रमण करे । काम के वशीभूत होकर सम्भोग न करे । इस कुलोच्छिन्नता को बचाने के उद्देश्य से आयोजित नियोग में भी गुरुजनों से अनुमोदन लेकर ही लगे ।"

इस स्मृतिवाक्य में भी कामुकता का निषेध किया गया है । वास्तविकता यही है कि, कुलमार्ग को जैसा सामान्य लोग समझते हैं, ऐसा नहीं है । इस मार्ग में वही लोग साधिकार प्रवेश पा सकते हैं, जो निर्विकल्पकता की लोकोत्तर वृत्ति में परिनिष्ठित हैं, जिनकी आत्मा महान् है अर्थात् जो सच्चे अर्थों में महात्मा हैं और ज्ञान के परम प्रकाश से प्रकाशमान हैं ।

नच एतदस्मदुपज्ञमेवेत्याह

**श्रीसर्वाचारहृदये तदेतदुपसंहृतम् ।**
**षडेताः शक्तयः प्रोक्ता भुक्तिमुक्तिफलप्रदाः ।।१०३।।**

**'वेगवत्यथ संहारी त्रैलोक्यक्षोभणी तथा ।**
**अर्धवीरासना चैव वक्त्रकौला तु पञ्चमी ।।'**

इत्यादि तु अवान्तरभेदप्रायं प्रत्येकं सम्भवदपि आनन्त्यादिह न परिगणितम्॥१०३॥

ननु एतदास्ताम्, 'बाह्यस्थया शक्त्या साकं समर्चयेत्' इत्येव कस्मादुक्तमित्याशङ्क्य आह

---

आगम की एक उक्ति है कि,

"चर्या भोग के लिये नहीं होती । यह काम की कसौटी होती है । शास्त्र और गुरु जन यही कहते हैं । इसमे साधक को यह प्रत्यवेक्षा करने का अवसर मिलता है कि, मेरा चित्त चेतना का स्पर्श कर सका है या नहीं । अभी मन का चाञ्चल्य निवृत्त हुआ है या नहीं? अभी वृत्ति स्थैर्य की उपलब्धि हुई है या नहीं?"

इस उक्ति के आधार पर साधक का यह परम कर्त्तव्य हो जाता है कि, वह पूर्णतया वृत्तिजित् हो । वह यह देखे कि, वह कहाँ है? किस स्तर पर है? या कितने पानी में है? उसको अपने चित्त चामीकर को संयम के निकष पर अनवरत निकषायित करने का अवसर प्राप्त है । उसका लाभ उठाकर वह ताप्तदिव्यकाञ्चन बने । इस अनुसन्धानात्मक प्रत्यवेक्षा से लक्ष्य की सिद्धि हो जाती है । इसमें सन्देह नहीं ॥१०१-१०२॥

श्री सर्वाचार हृदय नामक शास्त्र में इस विषय का उपसंहार करते हुए कहा गया है कि, ये छः शक्तियाँ भुक्ति और मुक्ति दोनों प्रकार के फल प्रदान करने में समर्थ होती हैं । इस विषय में एक श्लोक भी प्रचलित है—

**द्वाभ्यां तु सृष्टिसंहारौ तस्मान्मेलकमुत्तमम् ।**

द्वाभ्यां शक्तिशक्तिमद्भ्यां हेतुभूताभ्यां हि सङ्घट्टवेलायां परस्परौन्मुख्येन मुख्येन स्वस्वरूपविश्रान्त्या सृष्टिसंहारौ। तस्मादुभयमयी स्थितिस्त-दुल्लासस्तु तुर्यांशे इति एवं तत्स्वरसत एव यदुदेति, तत इदं मेलकमुत्तमं परपदापत्तिदायित्वात् तादात्म्यकरमित्यर्थः।

---

"वेगवती, संहारी, त्रैलोक्य क्षोभिणी, अर्धवीरासना और वक्त्र-कौला ये पाँच प्रकार की विशिष्ट स्त्रियाँ भी इस मार्ग में गृहीतव्य हैं ।"

किन्तु ये अवान्तर भेद-प्रथा को प्रथित करने वाले मतान्तर को प्रकट करते हैं । यह प्रचलित पद्धति में स्वीकृत नहीं है । इस तरह के मुण्डे मुण्डे मतिर्भिन्ना के अनुसार तो अनन्त भेद हो सकते हैं । इन कथनों का कोई शास्त्रीय महत्त्व नहीं । अतः इनका परिगणन यहाँ नहीं किया गया है ॥१०३॥

श्लोक ९६ में बाह्यस्थ शक्ति के साथ सम्यक् रूप से अर्चा करने की विधि का निर्देश है । इसका स्पष्टीकरण करते हुए कह रहे हैं कि, विश्वसृष्टि और संहार के मूल हेतु शिव और शक्ति यही दो हैं । दो से ही सृष्टि और संहार दोनों होते हैं । शिव शक्ति को ही यहाँ शक्तिं और शक्तिमान् कहते हैं । कुलाम्नाय में शक्तिमान् साधक बाह्य स्त्री शक्ति से संघट्ट की प्रक्रिया में प्रवृत्त होता है । यहाँ परस्परौन्मुख्य की साक्षात् अनुभूति होती है । उसी दशा में शक्ति में शक्तिमान् की स्वरूपविश्रान्ति होती है । स्वरूप विश्रान्ति की उभयमयी स्थिति का रहस्य बोध होता है । द्वित्व से एकत्व का उल्लास होता है । यह उभयमयी स्थिति का उल्लास है । इसका क्रमिक रूप तुर्यांश में उदित होता है । संघट्ट और स्वरूप विश्रान्ति, उभयमयी स्थिति और उसका उल्लास— यह सब इस मेलक से सम्भव है । अपनी पत्नी से यह सम्भव नहीं है । इसलिये इस परपदापत्तिदायक और तादात्म्य बोध जनक मेलक का महत्त्व सिद्ध होता है ।

कथं च एतत् कार्यमित्याह

**तामाहृत्य मिथोऽभ्यर्च्य तर्पयित्वा परस्परम् ।।१०४।।**

**अन्तरङ्गक्रमेणैव　　मुख्यचक्रस्य　　पूजनम् ।**

अभ्यर्च्येति अर्थात् शक्तिशक्तिमत्पदे। पूजनमिति अर्थात् कार्यम्।।

ननु कोऽसावान्तरः क्रमः, किंच तत् मुख्यं चक्रमित्याशङ्क्य आह

---

इस प्रक्रिया को प्रारम्भ करने के लिये सर्वप्रथम बाह्या शक्ति का आवाहन और उसके बाद पूजन आदि का कार्य सम्पन्न किया जाता है। यह पूरी तरह कैसे सम्पन्न किया जाय, इस विषय में अपना मन्तव्य प्रकट करते हुए कह रहे हैं कि, उसे समादर पूर्वक उचित कुलम्नायानुकूल पूजास्थान पर ले आना चाहिये । अपने को शक्तिमान् स्तर पर और उसे शक्ति स्तर पर संकल्पित करना दूसरी प्रक्रिया की जानी चाहिये । तीसरा क्रम परस्पर अर्चन का है । शक्ति शक्तिमान् के रूप में दोनों पूज्य माने जाते हैं । शक्तिरूपा दूती शक्तिमान् की पहले पूजा कर ले । इसके बाद शक्तिमान् शक्ति की पूजा पूरी करे । इसमें जन्म स्थान की पूजा का विशेष महत्त्व होता है । तत्पश्चात् परस्पर तृप्ति के समग्र उपायों और उपादानों से तर्पण आवश्यक है ।

इतनी प्रक्रिया पूरी कर लेने पर अन्तरङ्गता सिद्ध हो जाती है । दोनों शक्ति और शक्तिमान् संविदद्वयमहाभाव के तादात्म्य और ऐकात्म्य के स्तर पर पहुँच जाते हैं, जहाँ उन दोनों के आन्तर अङ्ग एक रूपता में अङ्गीकृत कर लिये गये होते हैं । इसी अन्तरङ्गता में मुख्यचक्र की पूजा का विधान है । मुख्यचक्र की पूजा इस क्रम की पूजा का अनुत्तर सोपान माना जाता है ।।१०४।।

यह पूछा जा सकता है कि, अन्तरङ्ग क्रम पर अपेक्षित प्रकाश प्रक्षिप्त नहीं किया गया है? ऐसा क्यों? साथ ही मुख्य चक्र को भी परिभाषित नहीं किया गया है । भगवान् शास्त्रकार इसी उद्देश्य की पूर्ति के लिये कारिकाओं का अवतरण कर रहे हैं—

**यदेवानन्दसन्दोहि संविदो ह्यन्तरङ्गकम् ।।१०५।।**

**तत्प्रधानं भवेच्चक्रमनुचक्रमतोऽपरम् ।**

अतोऽपरमिति तथा न आनन्दसन्दोहीत्यर्थः।।

चक्रशब्दस्य च प्रवृत्तौ किं निमित्तमित्याशङ्क्य आह

---

वस्तुतः विश्व की मूल शक्ति संविद् शक्ति है । इसे ही चिति शक्ति भी कहते हैं । यह विश्व सिद्धि की हेतु मानी जाती है । संवित्स्वातन्त्र्य ही आनन्द शक्ति कुलम्नाय स्वीकृत स्वरूप माना जाता है । आनन्द सन्दोह प्रद वह अवस्था मानी जाती है, जब आन्तरङ्गिकता तरङ्गित हो उठती है । शक्ति और शक्तिमान् की आन्तरङ्गिता तादात्म्य में प्रतिफलित होती है । उस आत्मैक्य में कोई अन्तर नहीं रह जाता । वही अन्तरङ्ग क्रम है ।

उसके आदिमान्त्यक्षण में उभयैक्य के समायोजन का प्रधान अङ्ग 'चक्र' कहलाता है । इससे बढ़कर कोई दूसरी निर्मिति ऐसी आनन्ददायिनी नहीं होती । आकीट चेतनपर्यन्त समस्त जीवसमुदाय मोह मुग्ध हो कर इसी चक्र की चारुता में अपनी चेतना को अभिचरित कर देता है । यही प्रधान चक्र कहलाता है । यही इसकी महत्त्वपूर्ण. परिभाषा है ।

'चक्र' शब्द की व्युत्पत्ति के प्रसङ्ग में आचार्य जयरथ ने चार धातुओं का नामोल्लेख किया है । १. कसी विकासे, २. चक तृप्तौ, ३. कृतीच्छेदने और ४. डकृञ् करणे । इन चारों से चक्र शब्द की निष्पत्ति व्याकरण शास्त्र मानता है । इन धातुओं में कसी विकासे अपाणिनीय धातु है । कस गत्यर्थक (भ्वादि) में विउपसर्ग लगा कर विकास अर्थ में उसका प्रयोग माना जा सकता है । सूत्र में अर्थात् श्लोक १०६ में विकास शब्द के कथन हैं । आचार्य ने उसी अर्थ में प्रचलित 'कसी' विकासे धातु का उल्लेख किया है । अर्थात् चक्र शब्द स्वात्मपरिष्कार परक, सर्वाप्यायन समर्थ, पाशों को अर्थात् विश्व के ऊपर पड़े आवरणों को नष्ट करने वाले और समस्त क्रियाशीलता के प्रत्यक्ष साक्षी अर्थ में प्रयुक्त अनेकार्थक शब्द

